# ॥ अथ श्रीगणपतिपूजनप्रयोगः ॥

कृतप्रायश्चित्तः कृतमङ्गलस्नानः कृतनिर्णेजनान्त-पञ्चमहायज्ञान्तनित्यक्रियः परिहिताहतसोत्तरीयवासा यजमानो कुशोत्तरकम्बलाद्यास्तृते स्वासने ऊर्णवस्त्राच्छादिते पीठे प्राङ्मुख उपविश्य पत्नीं स्वदक्षिणतः प्राङ्मुखीमुपवेशयेत् ॥


आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661

## शिखाबन्धनम्

**मानस्तोके तनयेमानऽआयुषिमानो गोषुमानोऽअश्श्वेषुरीरिषः।**

**मानोंव्वीरान्नुद्रभामिनोंव्वधीहविष्मन्तः सदमित्त्वाहवामहे ॥**

**चिद्रूपिणि महामाये दिव्यतेजः समन्विते ।**

**तिष्ठ देवि शिखाबन्धे तेजो वृद्धिं कुरुष्व मे ॥**

इति शिखां बध्नीयात् ।

## कुशपवित्रधारणम्

दक्षिणहस्ते कुशद्वयं वामहस्ते कुशत्रयं च धारयेत् ।

**पवित्रेस्त्थोवैष्ण्णव्यौसवितुर्व्वः÷प्रसवऽउत्त्पुनाम्म्यच्छिद्रेण पवित्रेंण सूर्य्यस्यरश्मिभिः÷॥**

**तस्यतेपवित्रपतेपवित्रपूतस्यत्त्कामपुनेतच्छकेयम् ॥**

इति मन्त्रेण दक्षिणवामहस्ते एकैकं पवित्रं धारयेत् ।

आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661

## आचमनम्

ॐ केशवाय नमः स्वाहा ।

ॐ नारायणाय नमः स्वाहा ।

ॐ माधवाय नमः स्वाहा ।

ॐ गोविन्दाय नमः इति हस्तं प्रक्षालयेत् ।

## प्राणायामः

ॐ कारस्य ब्रह्मा ऋषिर्दैवी गायत्री प्रजापतिऋषिर्गायत्र्युष्णिग- नुष्टुब्बृहती-पंक्तित्रिष्टुब्जगत्य-श्छन्दांस्यग्नि- वायुसूर्यबृहस्पति- वरुणेन्द्रविश्वेदेवा तत्सवितुरिति विश्वामित्रऋषिर्गायत्री छन्दः सविता देवता, आपोज्योतिरिति शिरसः प्रजापतिऋषिर्यजुश्छन्दोब्रह्माग्नि - वायुसूर्या देवताः प्राणायामे विनियोगः ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः

प्रचोदयात् । ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

## तिलककरणम्

स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ।

विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥

## स्वस्त्ययन

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥

देवानां भद्रा सुमतिर्ऋजूयतां देवाना रातिरभि नो निवर्तताम्। देवाना ँ सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥

तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणः सोममश्विना सरस्वती नः सुभगा मयस्करत्॥

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः।

तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥

तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम्।

पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः ।

अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवा सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।

पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥

अदितिद्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ (शु० य० २५ | १४ - २३)

द्यौः शान्तिरन्तरिक्षः शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।

वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वः शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

(शु० य० ३६ | १७)

यतो यतः समीहसे ततो नो अभयं कुरु । शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥ सुशान्तिर्भवतु ॥

(शु० य० ३६ | २२ )

## देवतानमस्कारः

श्रीमन्महागणाधिपतये नमः । लक्ष्मीनारायणाभ्यां नमः ।

उमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः ।

शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः ।

इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः ।

ग्रामदेवताभ्योनमः । वास्तुदेवताभ्यो नमः ।

स्थानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः ।

सर्वेभ्यो ब्राह्मणेभ्यो नमः । ॐ सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ।

## मंगलश्लोकवाचनम्

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।

लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।

द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥

विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।

सङ्ग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।

सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥

सर्वमङ्गलमाङ्गल्ये! शिवे सर्वार्थसाधिके ।

शरण्ये त्र्यम्बके! गौरि नारायणि नमोऽस्तु ते ॥

सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।

येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।

विद्याबलं देवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।

येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।

तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।

तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

स्मृतेः सकलकल्याणभाजनं यत्र जायते ।

पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥

सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् ।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥

## प्रधानसङ्कल्पः –

ॐ विष्णुर्विष्णुर्विष्णुः स्वस्तिश्रीसच्चिदानन्दरूपस्य ब्रह्मणोऽनिर्वाच्यमायया यथाशक्ति विजृम्भिताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्वोदिताहङ्कारतृतीयोद्भुतवियदादिपञ्चकेन्द्रियदेवतानिर्मिताण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकस्य पितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धारणाय च प्रजापतिप्रार्थितस्य महापुरुषस्य श्वेतवाराहावतारेण ध्रियमाणायामस्यां धरित्र्यां भूर्लोकसंज्ञितायां सप्तद्वीपमण्डितायां

क्षीरोदादिसमुद्रतद्वीपवलयीकृतलक्षयोजनविस्तीर्णे जम्बूद्वीपे स्वर्गस्थितामरादिसेवितगङ्गादिसरिद्भिः पाविते निखिलजनपावनकर्तृशौनकादिमहामुनिनिवासभूते नैमिषारण्यादियुक्ते मोक्षसाधनभूते भारतवर्षे चैवं श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भरतखण्डे भारतवर्षे जम्बूद्वीपे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे अमुकजनपदान्तर्गते अमुकनगरे / ग्रामे अस्मिन् वर्तमाने अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे अमुके श्रीवैक्रमाब्दे अमुकनामसंवत्सरे अमुकायने अमुक अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ अमुक गोत्रोत्पन्नः अमुक नामाऽहं ममामुकस्य अमुकमङ्गले शुभपुण्यतिथौ गोत्रोच्चारः अमुकसगोत्रोत्पन्नः अमुकप्रवरान्वितः

अमुकशाखाध्यायी अमुकशर्मा / वर्मा / गुप्तः/दासः अहं ममात्मनः श्रुतिस्मृतिपुराणोक्तपुण्यफ़लावाप्तये (ऐश्वर्याभिवृद्ध्यर्थं तथा च जन्मराशेः अखिलकुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचन विरुद्धचतुर्थाष्टमादिस्थानस्थिताः क्रूरग्रहाः तैः सूचितं सूचयिष्यमाणञ्च यत् सर्वारिष्ट तद्विनाशद्वारा सर्वदा तृतीयैकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेः अविच्छिन्नवृद्ध्यर्थम् आदित्यादिनवग्रहानुकूलतासिद्ध्यर्थम् इन्द्रादिदशदिक्पालदेवताप्रसन्नतासिद्ध्यर्थम् आधिदैविकाधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्षचतुर्विधफलावात्यर्थम्) यथाज्ञानेन यथामिलितोपचारद्रव्यैः गणपतिपूजनाख्यं कर्म करिष्ये ॥

## अङ्गसङ्कल्पः

तदङ्गत्वेन निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं कर्माभ्युदयार्थं स्वस्तिपुण्याहवाचनम् आचार्यादि-ऋत्विग्वरणं पञ्चभूसंस्कारपूर्वकं वह्निस्थापनं च करिष्ये ॥

**पुनर्जलमादाय–** तत्रादौ आसनविधिं दिग्रक्षणं कलशार्चनं दीपपूजनं सूर्यपूजनं शङ्खघण्टार्चनं च करिष्ये ॥

## आसनविधिः

आदौ कुशासनव्याघ्रचर्मवस्त्राणामुपर्युपरिस्थापितानामुपरि ॐ अनन्तासनाय नमः ॐ विमलासनाय नमः ॐ पद्मासनाय नमः इति मन्त्रत्रयेण त्रीन् दर्भान्निदध्यात् ॥

## उपवेशनम्

हस्ते जलमादाय

ॐ पृथ्वित्वयेत्यस्य मेरुपृष्ठऋषिः सुतलं छन्दः कूर्मो देवता आसनोपवेशने विनियोगः ।

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।

त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

इत्युपविशेत् ॥

## कर्मपात्र- कलश स्थापन

ततः स्ववामभागे अक्षतपुञ्जोपरि जलपूरितं कलशं संस्थाप्य तत्र वरुणमावाहयेत् ।

## जलमादाय वरुणावाहनम्

ॐ तत्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः ।

तत्त्वायामिब्ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोव्वरुणेहबोद्ध्युरुशꣳ समानऽआयुरप्प्रमोषी ॥

मकरस्थं पाशहस्तमम्भसां पतिमीश्वरम् ।

आवाहये प्रतीचीशं वरुणं यादसां पतिम् ॥

ॐ भूर्भुवः स्वः अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि ।

## प्रतिष्ठापनम्

मनोजुतिमुषतामायस्यबृहस्पतिर्यज्ञमिमन्तनोत्त्वरिंष्टँयज्ज् ꣳ जसमिमन्दधातु । विश्श्वेंदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥

प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ।

प्रतिष्ठान्ते करोम्यत्र मण्डले दैवतैः सह ॥

ॐ भूर्भुवः स्वः भो वरुण सुप्रतिष्ठितो वरदो भव ।

ॐ भूर्भुवः स्वः वरुणाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।

## कलशाभिमन्त्रणम्

अनामिकया कलशं स्पृष्ट्वा अभिमन्त्रयेत् ।

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।

मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।

ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥

अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ।

गायत्री चात्र सावित्री शान्तिः पुष्टिकरी तथा ॥

आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।

गङ्गे च यमुने चैव गोदावरि सरस्वति ॥

कावेरि नर्मदे सिन्धो जलेऽस्मिन् सन्निधिं कुरु ।

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥

तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥

कलशे **वरुणाय नमः** इति सम्पूज्य कलशं प्रार्थयेत् ।

देवदानवसंवादे मथ्यमाने महोदधौ ।।

उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥

त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।

त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥

शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।

आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥

त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।

त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव ॥

सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥

ॐ भूर्भुवः स्वः वरुणाय नमः प्रार्थनापूर्वकनमस्कारान् समर्पयामि।

जलमादाय – अनेन कृतेन पूजनेन वरुणः प्रीयताम् ॥

ततः अभिमन्त्रितं जलं गृहीत्वा पूजाद्रव्याणि स्वात्मानं च सम्प्रोक्षेत् ।

**सम्प्रोक्षणमन्त्रः**

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

**दीपपूजनम् -**

घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय, हस्ते गन्धाक्षतपुष्पाण्यादाय दीपं सम्पूजयेत् ।

भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ।

यावत्पूजासमाप्तिः स्यात्तावदत्र स्थिरो भव ॥

ॐ भूर्भुवः स्वः कर्मसाक्षिण्यै दीपस्थदेवतायै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

**कर्मसाक्षी सूर्यपूजनम्**

आकृष्णेनरजसा वर्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च।

हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्श्यन् ॥

ॐ भूर्भुवः स्वः श्रीसूर्यनारायणाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।

सूर्यं प्रार्थयेत् -

आदित्यस्य नमस्कारान् ये कुर्वन्ति दिने दिने ।

जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥

भैरवाज्ञा -

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।

भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

स्वदक्षिणे ॐ भूर्भुवः स्वः भैरवाय नमः प्रार्थनापूर्वकनमस्कारान् समर्पयामि ।

## शङ्खपूजनम् -

“**ॐ महाजलचराय हुं फट् स्वाहा पाञ्चजन्याय नमः**” इति मन्त्रेण शङ्खं प्रक्षाल्य तस्मिन् शुद्धजलं पूरयेत् ।

शङ्खं चन्द्रार्कदैवत्यं वरुणं चाधिदैवतम् ।

पृष्ठे प्रजापतिं विद्यादग्रे गङ्गा सरस्वती ॥

त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।

शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् ॥

ॐ भूर्भुवः स्वः शङ्खस्थदेवतायै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि।

## शङ्खं प्रार्थयेत् -

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।

नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥

**ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥**

(शङ्खमुद्रां प्रदर्शयेत् )

## घण्टापूजनम् -

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।

घण्टानादं प्रकुर्वीत पश्चाद्घण्टां प्रपूजयेत् ॥

ॐ भूर्भुवः स्वः घण्टास्थाय गरुडाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।

(गरुडमुद्रां प्रदर्शयेत्)

## ॥ अथ गणपतिपूजनम् ॥

तत्रादौ आग्नेय्यां रक्तवस्त्रावृते भद्रपीठे गोधूमराशिं कृत्वा तदुपरि ताम्रपात्रे सिद्धिबुद्धिसहितं महागणपतिं संस्थाप्य सम्पूजयेत् ॥

हस्तौ बद्ध्वा सिद्धिबुद्धिसहितं महागणपतिं ध्यायेत् ॥

गुणानान्त्वागणपतꣳहवामहे प्रियाणान्त्वाप्रियपतिꣳ

हवामहे निधीनान्त्वानिधिपतिꣳहवामहे व्वसोमम ।

आहमजानिगर्भधमात्त्वमजासिगर्भधम् ॥

श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः

क्षीराब्धौ रत्नदीपैः सुरनरतिलकं रत्नसिंहासनस्थम् ।

दोर्भिपाशाङ्कुशाब्जाभयवरदधतं चन्द्रमौलिं त्रिनेत्रं

ध्यायेच्छान्त्यर्थमीशं गणपतिमममलं श्रीसमेतं प्रसन्नम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ध्यायामि ॥

## आवाहनम्

सहस्रशीर्षापुरुषसहस्रक्ष सहस्रपात् ।

सभूमिᳬ सर्व्वतस्पृत्त्वात्त्यतिष्ठद्दशाङ्गुलम् ॥

आगच्छ देवदेवेश तेजोराशे जगत्पते ।

क्रियमाणां मया पूजां गृहाण सुरसत्तम ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः आवाहयामि ॥

## प्रतिष्ठापनम्

मनोंजुतिर्ज्जुषतामाज्यस्यबृहस्प्पतिर्यज्ञमिमन्तनोत्त्वरिष्टँ ज्ज्ञᳬ समि॒मन्दधातु ।

विश्श्वेदेवासऽइहमादयन्ता॒मो३म्प्रतिष्ठ ॥

प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ।

प्रतिष्ठान्ते करोम्यत्र मण्डले दैवतैः सह ॥

ॐ भूर्भुवः स्वः भो सिद्धिबुद्धिसहित श्रीमन्महागणाधिपते सुप्रतिष्ठितो वरदो भव ॥

## आसनम्

पुरुंषऽएवेदꣳ सर्व्वंय्यद्भूतँय्यच्चभाव्यम् ।

उतामृतत्त्वस्येशानो य्यदन्नेनातिरोहति ॥

रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् ।

आसनं च मया दत्तं गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः आसनं समर्पयामि ॥

## पाद्यम्

एतावानस्यमहिमातोज्यायोश्चपूरुषः ।

पादोऽस्यविश्श्वाभूतानित्रिपादस्यामृतन्दिवि ॥

उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ।

पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः पाद्यं समर्पयामि ॥

## अर्घ्यम्

त्रिपादुर्द्ध्वऽउदैत्त्पुरुषः पादोस्येहाभवत्त्पुनः ।

ततोव्विष्ष्वङ्ङव्व्यक्क्रामत्त्साशनानशनेऽअभि ॥

अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैर्युतम् ।

ताम्रपात्रस्थितं चैव फ़लतोयसमन्वितम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः अर्घ्यं समर्पयामि ॥

## आचमनम्

ततोविराडजायतविराजोऽअधिपूरुषः ।

सजातोऽअत्त्यरिच्यतपश्चाद्भूमिमथोपुरः ॥

सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ।

आचम्यतां मया दत्तं गृहीत्वा परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः आचमनं समर्पयामि ॥

## स्नानम्

तस्माद्यज्ज्ञात्त्सर्व्वहुतः सम्भृतम्पृषदाज्यम् ।

पशूँस्ताँश्चक्क्रेव्वायव्यानारण्ण्याग्ग्राम्म्याश्च्चये ॥

गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः ।

स्नापितोऽसि मया देव ह्यतः शान्तिं कुरुष्व मे ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः स्नानं समर्पयामि ॥ स्नानान्ते आचमनं समर्पयामि ॥

## पयः स्नानम्

पय÷पृथिव्व्याम्पयऽओषधीषुपयोदिव्व्यन्तरिक्क्षेपयोधाः।

पयस्वतीःप्प्रदिश÷ सन्तुमह्य्यम् ।।

कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् ।

पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः पयःस्नानं समर्पयामि ॥

पयःस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि।

## दधिस्नानम्

द॒धि॒क्क्राव्ण्णोऽअकारिञ्जिष्ण्णोरश्श्वस्यवाजिनः ।

सुरभिनोमुखाकरत्त्प्रणऽआयुꣳषितारिषत् ॥

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ।

दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः दधिस्नानं समर्पयामि ॥

दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ।

## घृतस्नानम्

घृतङ्घृतपावानऽपिबतव्वसाँव्वसापावानऽ

पिबतान्तरिक्क्षस्यहविरसि स्वाहा ।

दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥

नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् ।

घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः घृतस्नानं समर्पयामि ॥

घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ।

## मधुस्नानम्

मधुव्वाताऽऋतायतेमधुक्क्षरन्तिसिन्धवऽ ।

माद्ध्वीर्नऽ सन्त्वोषधीऽ।।

मधुनक्तमुतोषसोमधुमत्त्पार्थिव६ रज÷ ।

मधुद्यौरस्तुन÷ पिता ॥

मधुमान्नोवनस्प्पतिर्म्मधुमाँ२ऽअस्तुसूर्य्य÷ ।

माद्ध्वीर्गावोभवन्तु÷ ॥

तरुपुष्पसमुद्भूतं सुस्वादुमधुरं मधु ।

तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः मधुस्नानं समर्पयामि ॥

मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ।

## शर्करास्नानम्

अ॒पा ७ रसमुद्वयस ६ सूर्य्येसन्त ६ समाहितम् । अपा ७ रसस्ययो रसस्तँ व्वोगृह्णाम्म्युत्तममुपयाम गृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥

इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ।
मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः शर्करास्नानं समर्पयामि ॥

शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि।

## गन्धोदकस्नानम्

गन्धर्वस्त्वाविश्वावसु ऽ परिदधातु विश्वस्यारिष्ट्यै यजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥

मलयाचलसम्भूतं चन्दनागरुसम्भवम् ।
चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः गन्धोदकस्नानं समर्पयामि ॥

गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ।

## उद्वर्तनस्नानम्

अꣳशुनातेऽअꣳशुः पृच्यताम्परुषापरु÷।

गन्धस्तेसोममवतुमदायरसासोऽअच्च्युतः ॥

नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ।

उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः उद्वर्तनस्नानं समर्पयामि ॥

उद्वर्तनस्नानान्ते शुद्धोदकस्नानं समर्पयामि ।

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ।

अत्रावसरे स्नानाङ्गपूजनं कृत्वा अभिषेकमाचरेत् ।

तद्यथा ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः गन्धं समर्पयामि ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः पुष्पं समर्पयामि ॥

आदि शंकर वैदिक विद्या संस्थान

दूरभाष: 9044016661

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः धूपम् आघ्रापयामि ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः दीपं दर्शयामि ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः नैवेद्यं निवेदयामि ॥

नैवेद्यं शुद्धजलेन सम्प्रोक्ष्य, "वँ" इति धेनुमुद्रयामृतीकृत्य, वामेन पद्ममुद्रां बद्धा, दक्षिणेन ग्रासमुद्राः प्रदर्शयेत् ।

ॐ प्राणाय स्वाहा ।

ॐ अपानाय स्वाहा ।

ॐ व्यानाय स्वाहा ।

ॐ समानाय स्वाहा ।

ॐ उदानाय स्वाहा ।

हस्तप्रक्षालनं समर्पयामि ।

मुखप्रक्षालनं समर्पयामि ।

आचमनीयं समर्पयामि।

शेषोपचारार्थे नमस्करोमि ।

जलमादाय – अनेन कृतेन स्नानाङ्गपूजनेन सिद्धिबुद्धिसहितः श्रीमन्महागणाधिपतिः प्रीयताम् ॥

निर्माल्यं घ्रात्वा उत्तरे विसृज्य, बहिः हस्तं प्रक्षाल्य, पुनः गन्धपुष्पाभ्यां देवं सम्पूज्य अभिषेकमारभेत् ॥

## अथाभिषेकः

(पुरुषसूक्तेन गणपत्यथर्वशीर्षेण वा अभिषेकः कार्यः) ॐ नमस्ते गणपतये... ॥ सुशान्तिर्भवतु ॥ सर्वारिष्टशान्तिर्भवतु ॥

## शुद्धोदकस्नानम्

शुद्धवाल सर्व्वशुद्धवालोमणिवालस्तऽआश्विना श्येत÷ श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णाण्णामाऽअंवलिप्तारौ॒ द्द्रानभोरूपा पार्ज्जन्न्याः ॥

गङ्गा सिन्धु सरस्वती च यमुना गोदावरी नर्मदा।

कावेरी सरयू महेन्द्रतनया चर्मण्वति वेदिका ।।

क्षिप्रा वेत्रवती महासुरनदी ख्याता जया गण्डकी।

पुण्याः पुण्यजलैः समुद्रसहिताः कुर्यात् सदा मङ्गलम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः शुद्धोदकस्नानं समर्पयामि ॥

शुद्धोदकस्नानान्ते शुद्धाचमनीयं समर्पयामि ॥

## वस्त्रम्

तस्माद्यज्ज्ञात्त्सर्बृहतऽऋच सामानिजज्ञिरे ।

छन्दाꣳसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥

सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ।

मयोपपादिते तुभ्यं गृह्येतां वाससी त्वया ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः वस्त्रं समर्पयामि ॥

वस्त्रान्ते आचमनीयं समर्पयामि ॥

## यज्ञोपवीतम्

तस्म्मादश्श्वाऽअजायन्तषेकेचाभयादतः ।

गावाहजज्ज्ञिरेतस्म्मात्तस्माज्जाताऽअजावयः ॥

नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।

उपवीतं मया दत्तं गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः यज्ञोपवीतं समर्पयामि ॥

यज्ञोपवीतान्ते आचमनीयं समर्पयामि ॥

## गन्धः

तँय्यज्ज्ञम्बर्हिषिप्प्रौक्क्षन्न्पुरुषञ्जामग्ग्रतः।

तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्च्चये ॥

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।

विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः गन्धं समर्पयामि ॥

## अक्षताः

अक्क्षन्नमीमदन्तुषवप्प्रियाऽअधूषत ।

अस्तोषतस्वभानवोविप्प्रानविष्ठयामतीषोजान्विन्द्रतेहरी ॥

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।

मया निवेदिता भक्त्या गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः अक्षतान् समर्पयामि ॥

## पुष्पम्

यत्त्पुरुषँव्व्यदधुः कतिधाव्व्यकल्प्पयन् ।

मुखङ्किमस्यासीत्त्किम्बाहूकिमूरूपादाऽउच्च्येते ॥

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।

मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः पुष्पं समर्पयामि ॥

## दूर्वाङ्कुरार्पणम्

काण्डत्त्काण्डात्त्प्ररोहन्तीपरुषꣳ परुषस्परि।

एवानादुर्व्वेप्प्रतनुसहस्रेणशतेन च ॥

विष्णवादिसर्वदेवानां दूर्वा वै प्रीतिदा सदा ।

वंशवृद्धिकरी नित्यं गणेशायार्पयाम्यहम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः दूर्वाङ्करान् समर्पयामि ॥

## पुष्पमाला

द्याम्मालेखीरन्तरिक्षम्माहिꣳसीꣳपृथिव्यासम्भव ।

अय ꣳ हत्त्वास्वधितिस्तेतिजान प्रणिनायमहतेसौभगाय । अत॒स्त्वन्देववनस्प्पतेशतवल्शोव्विरोहसहस्रवल्शाव्विवय ꣳ रुहेम ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः पुष्पमालां समर्पयामि ॥

## सौभाग्यद्रव्याणि

**अहिरिभोगैः पर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः ।**

**हस्तघ्नो विश्श्वाव्वयुनानि विद्वान्पुमान्पुमा ꣳ सम्परिपातुविश्श्वतः॥**

अबीरं च गुलालं च हरिद्रादिसमन्वितम् ।

नानापरिमलद्रव्यं गृहाण परमेश्वर ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः सौभाग्यद्रव्याणि समर्पयामि ॥

## धूपः

ब्राह्मणोस्यमुखमासीबाहूराज॒न्न्य÷ कृतः ।

ऊरूतदस्ययद्वैश्श्य÷पद्भ्याꣳ शुद्रोऽअजायत ॥

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः धूपमाघ्रापयामि

## दीपः

चन्द्रमामनसोजातश्च्चक्षोॆ सूर्य्योऽअजायत ।

श्रोत्राद्द्वायुश्च्चप्प्राणश्च्चमुखादग्निरजायत ॥

साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।

दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः दीपं दर्शयामि ॥

## नैवेद्यम्

नाभ्याऽआसीदन्तरिक्षॆ शीर्णोद्यौः समवर्त्तत ।

पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाॅ२ अकल्प्पयन् ॥

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।

भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ।

आहारं भक्ष्यभोज्यं च नैवेद्यं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः नैवेद्यं निवेदयामि ॥

नैवेद्यं शुद्धजलेन सम्मोक्ष्य, "वँ" इति धेनुमुद्रयामृतीकृत्य, वामेन पद्ममुद्रां बद्ध्वा, दक्षिणेन ग्रासमुद्राः प्रदर्शयेत् ।

ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । हस्तप्रक्षालनं समर्पयामि । मुखप्रक्षालनं समर्पयामि । आचमनीयं समर्पयामि ।

## ताम्बूलम्

यत्त्पुरुषेणहविषादेवायज्ञमतन्वत ।

व्वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽइषद्ध्मः शरद्धविः॥

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।

एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः ताम्बूलं समर्पयामि ॥

## फलम्

याः फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्चपुष्प्पिणीः।

बृहस्प्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳ हसः।।

इदं फलं मया देव स्थापितं पुरतस्तव ।

तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः फलं समर्पयामि ॥

## दक्षिणा

यद्दत्तँय्यत्त्परादानँय्यत्पूर्त्तंय्याश्च्चदक्षिणाः।

तदग्निर्वैश्श्वकर्म्मणः स्वर्देवेषुनोदधत् ॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।

अर्प्यते देवदेवेश ह्यतः शान्तिं प्रयच्छ मे ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः दक्षिणां समर्पयामि ॥

## कर्पूरारार्तिक्यम्

आरात्रिपार्त्थिवꣳ रजः॑ पितुरप्प्रायिधामभिः ।

दिवः सदाꣳसिबृहतीव्वितिष्ठ्ठसऽआत्त्वेषँव्वर्त्ततेतमः॑ ॥

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ।

सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः कर्पूरारार्तिक्यं दर्शयामि ॥

आरार्तिक्यं भूमौ निधाय, जलेन प्रदक्षिणीकृत्य, पुष्पैर्देवाभिवन्दनं, स्वात्मकल्याणाय आत्माभिवन्दनम् । हस्तं प्रक्षालयेत् ।

## प्रदक्षिणा

सप्प्तास्यासन्न्परिधयस्त्रिः सप्तसमिध कृताः ।
देवायद्यज्ज्ञन्तन्वानाऽअबद्धनन्न्पुरुषम्पशुम् ॥
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः प्रदक्षिणां समर्पयामि ॥

## मन्त्रपुष्पाञ्जलिः

यज्ज्ञेनयज्ज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्न्यासन् ।
तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाद्ध्याः सन्तिंदेवाः॥

नानासुगन्धिपुष्पाणि ऋतुकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर ॥
ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

## प्रार्थयेत्

असवेस्वाहाव्वसवेस्वाहाव्विभुवेस्वाहाव्विवस्वतेस्वाहागण श्श्रियेस्वाहागणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहाशूषा यस्वाहाससर्प्पायस्वाहाचन्द्रायस्वाहाज्ज्योतिषेस्वाहामलि म्म्लुचायस्वाहादिवापतयतेस्वाहा॥

नमोगणेभ्योगणपतिब्भश्च्चवोनमोनमोव्व्रातेभ्योव्व्रातपति भ्यश्च्चवोनमोनमोगृत्सब्भ्योगृत्सपतिब्भ्यश्च्चवोनमोनमो विरूपेभ्योविश्श्वरूपेब्भ्यश्च्चवोनम ॥



आदि शंकर वैदिक विद्या संस्थान
दूरभाष: 9044016661

हरिः ॐ नमस्ते गणपतये ॥

त्वमेव प्रत्यक्षं तत्त्वमसि ॥ त्वमेव केवलं कर्ताऽसि ॥

त्वमेव केवलं धर्ताऽसि ॥ त्वमेव केवलं हर्ताऽसि ॥

त्वमेव सर्वं खल्विदं ब्रह्मासि ॥

त्वं साक्षादात्माऽसि नित्यम् ॥ १॥

**॥ स्वरूप तत्त्व ॥**

ऋतं वच्मि (वदिष्यामि) ॥ सत्यं वच्मि (वदिष्यामि) ॥ २॥

अव त्वं माम् ॥ अव वक्तारम् ॥ अव श्रोतारम् ॥

अव दातारम् ॥ अव धातारम् ॥

अवानूचानमव शिष्यम् ॥

अव पश्चात्तात् ॥ अव पुरस्तात् ॥

अवोत्तरात्तात् ॥ अव दक्षिणात्तात् ॥

अव चोर्ध्वात्तात् ॥ अवाधरात्तात् ॥

सर्वतो मां पाहि पाहि समंतात् ॥ ३॥

त्वं वाङ्मयस्त्वं चिन्मयः ॥

त्वमानंदमयस्त्वं ब्रह्ममयः ॥

त्वं सच्चिदानंदाद्वितीयोऽसि ॥

त्वं प्रत्यक्षं ब्रह्मासि ॥

त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ४॥

सर्वं जगदिदं त्वत्तो जायते ॥

सर्वं जगदिदं त्वत्तस्तिष्ठति ॥

सर्वं जगदिदं त्वयि लयमेष्यति ॥

सर्वं जगदिदं त्वयि प्रत्येति ॥

त्वं भूमिरापोऽनलोऽनिलो नभः ॥

त्वं चत्वारि वाक्पदानि ॥ ५॥

त्वं गुणत्रयातीतः त्वमवस्थात्रयातीतः ॥

त्वं देहत्रयातीतः ॥ त्वं कालत्रयातीतः ॥

त्वं मूलाधारस्थितोऽसि नित्यम् ॥

त्वं शक्तित्रयात्मकः ॥

त्वां योगिनो ध्यायंति नित्यम् ॥

त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वं
इन्द्रस्त्वं अग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं
ब्रह्मभूर्भुवःस्वरोम् ॥ ६॥

## ॥ गणेश मंत्र ॥

गणादिं पूर्वमुच्चार्य वर्णादिं तदनंतरम् ॥
अनुस्वारः परतरः ॥ अर्धेन्दुलसितम् ॥ तारेण ऋद्धम् ॥
एतत्तव मनुस्वरूपम् ॥ गकारः पूर्वरूपम् ॥
अकारो मध्यमरूपम् ॥ अनुस्वारश्चान्त्यरूपम् ॥
बिन्दुरुत्तररूपम् ॥ नादः संधानम् ॥
संहितासंधिः ॥ सैषा गणेशविद्या ॥
गणकऋषिः ॥ निचृद्गायत्रीच्छंदः ॥
गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥ ७॥

## ॥ गणेश गायत्री ॥

एकदंताय विद्महे । वक्रतुण्डाय धीमहि ॥
तन्नो दंतिः प्रचोदयात् ॥ ८॥

## ॥ गणेश रूप ॥

एकदंतं चतुर्हस्तं पाशमंकुशधारिणम् ॥

रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥

रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससम् ॥

रक्तगंधानुलिप्तांगं रक्तपुष्पैः सुपूजितम् ॥

भक्तानुकंपिनं देवं जगत्कारणमच्युतम् ॥

आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥

एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९॥

## ॥ अष्ट नाम गणपति ॥

नमो व्रातपतये । नमो गणपतये । नमः प्रमथपतये ।

नमस्तेऽस्तु लंबोदरायैकदंताय । विघ्ननाशिने शिवसुताय ।
श्रीवरदमूर्तये नमो नमः ॥ १०॥

## प्रार्थना

विघ्नेश्वराय वरदाय सुरप्रियाय

लम्बोदराय सकलाय जगद्धिताय ।

नागाननाय श्रुतियज्ञविभूषिताय

गौरीसुताय गणनाथ नमो नमस्ते ॥

त्वां विघ्नशत्रुदलनेति च सुन्दरेति

भक्तप्रियेति सुखदेति वरप्रदेति ।

विद्याप्रदेत्यघहरेति च ये स्तुवन्ति

तेभ्यो गणेश वरदो भव नित्यमेव ॥

भक्तार्तिनाशनपराय गणेश्वराय

सर्वेश्वराय सुखदाय सुरेश्वराय ।

विद्याधराय विकटाय च वामनाय

भक्तप्रसन्नवरदाय नमो नमस्ते ॥

नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ।

नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥

विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ।

भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥

लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ।

निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः प्रार्थनापूर्वकनमस्कारन् समर्पयामि ॥

जलमादाय - अनेन कृतेन पूजनेन सिद्धिबुद्धिसहितः श्रीमन्महागणाधिपतिः प्रीयताम् ॥

**॥ इति गणपतिपूजनम् ॥**